भिरतिरतिप्रभृतयो निसर्गजाः । अनुक्ताश्च स्वबुद्ध्या अभ्यूह्याः । एषां नैसर्गिकं बलं प्रागुक्तं । तात्कालिकं तस्य स्वकर्तृबलतुल्यम् । यत् गुरुः—

यस्य यस्य च यो नाथो गुणस्यास्य बलेन तु ।
ज्ञातव्या बलसङ्ख्या च गुणस्यास्य विचक्षणैः ॥

इति । इदं गुणानामेव । दोषाणां तु व्यस्तं । प्राबल्ये दौर्बल्यम् । दौर्बल्ये प्राबल्यमिति । तथा चोक्तं—

येन ग्रहेण यो दोषः तस्मिन् बलिनि सोऽबलः ।

इति । स्यादेतत्, कथं ग्रहाणां दौर्बल्ये तत्कृतानां दोषाणां प्राबल्यमुच्यत इति । यत आह गुरुः—

यो जितो रश्मिहीनो वा रवावस्तमितोऽपि वा ।
बलहीनोऽपि वा तस्य दोषा न स्युः फलाय ते ॥

इति । अपि च सदसत्स्थानादिगतैर्ग्रहादिभिः शुभाशुभफलप्रदानानां गुणदोषसंज्ञा स्यात्, प्रबला ग्रहादयस्तानि पोषयन्ति दुर्बलास्तु न प्रयच्छन्ति । तथा च भरद्वाजः—

ये ग्रहा बलहीनास्ते स्वारिनीचारिवर्गगाः ।
लग्नादिभावतः प्रोक्ता न दद्युरशुभान् शुभान् ॥

इति । यथा हि लोके प्रभवः प्रतोषरोषभाजः स्वसेवकादीनां सदसत्फलानि प्रदातुं प्रभविष्णवः । अनीश्वरास्तु न तुच्छान्यऽपि तानि प्रापयितुमीशते; तथेह दुर्बलेषु ग्रहेषु तत्कृतानां दोषाणां प्राबल्यं नोपपद्यत इति । अत्रोच्यते, सत्यम्, कर्तुर्ग्रहस्य दौर्बल्ये प्राबल्यं नोपपन्नं, किंत्विह प्राबल्यमिति । यद्ग्रहाणामिष्टस्थानगतत्वेन शुभफलदानशक्तिमत्त्वं तदभिधीयते । न पुनर्नैसर्गिकं दिग्बलवत्त्वम् । एवं च अयमर्थः स्यात्—कर्तुः ग्रहस्य दौर्बल्ये अनिष्टस्थान-

गत्या शुभफलदानशक्तिराहित्ये तद्दोषाणां प्राबल्यमिति । अथ-कथमनिष्टस्थानास्थितैरपि स्थानबलसंपन्नैरपि ग्रहैः स्वदोषा बाध्यन्ते । उच्यते—स्थानादिवीर्यवन्तोऽनिष्टस्थानस्था अपि शुभफलदानशक्तिमन्त इति प्राबल्यात् तेषां दोषबाधकत्वं युक्तम् । इत्थं गुणदोषाणां बलाबलमुक्त्वा शुभक्रियाकालमाह—

**दोषान् विनिघ्नन्ति गुणा बलाढ्याः**
**समानतायां बलिनो हि दोषाः ।**
**इति द्वयानां च विमृश्य वीर्यं**
**शुभं बलीयस्सु गुणेषु कुर्यात् ॥ ४८ ॥**

तात्कालिकादिबलसंपन्ना गुणा दोषान् विनाशयन्ति । अर्थादेव बलाढ्या दोषा गुणान् बाधन्त इति सिद्धं । तथा च गुरुः—

यत्र वा यस्य दौर्बल्यं गुणे विहितयोस्तयोः ।
गुणदोषाख्ययोस्तस्य नास्तितेत्याह पद्मभूः ॥

इति । अपवादगुणास्तु बलवद्दोषैरपि न बाध्यन्ते । तथाच सर्वसिन्धौ—

तयोरन्यं बली हन्ति तुल्यौ चेन्निष्फलावुभौ ।
बलवानपि दोषौघः स्वापवादैर्विनश्यति ॥

इति । समानतायां—बलसाम्ये दोषा गुणेभ्यो बलिनो हि भवन्ति । अतस्तदा दोषाणामेव प्राबल्यं । तथा हि गुणदोषाणामन्योन्यविघातेन स्वफलनाशे कर्मफलमप्यसत् स्यात् । ततश्च नहि कश्चित्फलापेक्षया कर्म करोतीति दोषप्राबल्यं सिद्धमेव—तथा श्रीपतिना "समानतायामपि रिष्टमेव" इति । रिष्टातिरिष्टसाम्ये रिष्ट-

मेव बलवदित्युक्तं। तथेहापीति। उक्तवद्द्वयानां गुणदोषाणां बलं विमृश्य सम्यग्विचार्य गुणेषु दोषेभ्यो बलवत्तरेषु शुभं कुर्यात्। तथा च गुरुः—

एवं बलं समालोच्य द्वयानामप्यतन्द्रितः।
बलैर्दोषाद्गुणे तुङ्गे निर्दोषे शुभकालता॥

इति। प्रकृतमध्यायमुपसंहरति —

**इति षोडशभिस्त्रिसङ्गुणैः**
**ग्रथितश्श्लोकवरैर्विगुम्भितः।**
**कृतसर्वबलाबलस्थिति-**
**र्वसितोऽध्याय इहैष पञ्चमः॥ ४९॥**

**इति विद्यामाधवीये बलाबलाध्यायः पञ्चमः.**

---

त्रिसंगुणैः षोडशभिरष्टचत्वारिंशद्भिः पद्यैर्ग्रथितः विहितः सप्ताङ्गगुणदोषबलाबलस्थितिरेष पञ्चमोऽध्यायः वसितः अवसितः समाप्त इत्यर्थः। वसित इत्यत्र "वष्टिवागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यल्लोपः॥

इत्थं विद्यामाधवीये मुहूर्तादर्शे विद्यामाधवस्यात्मजेन।
अध्यायोऽभूद्गुम्फितो विष्णुनाम्ना वीर्यावीर्ये दर्शयन् पञ्चमोऽयम्॥

**इति मुहूर्तदीपिकायां विद्यामाधवीयव्याख्यायां**
**बलाबलाध्यायः पञ्चमः**

## सव्याख्याने विद्यामाधवीये गृहीता निबन्धारः

## ..सव्याख्याने विद्यामाधवीये स्मृता निबन्धाः.